  

च मंत्रवर्णः । अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः । करिष्ये वचनं तव अहं त्वत्प्रसादात्कृतार्थो, न मम कर्तव्यमस्तीत्यभिप्रायः ॥७३॥

परिसमाप्तः । शास्त्रार्थः अथेदानीं कथासंबंधप्रदर्शनार्थं संजय उवाच—

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

इत्यहमिति । इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यंतविस्मयकरं रोमहर्षणं रोमांचकरम् ॥७४॥

त चेमं—

व्यासप्रसादात् श्रुतवानिमं गुह्यतमं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥

व्यासेति । व्यासप्रसादात् ततो दिव्यचक्षुर्लाभात् श्रुतवानिमं संवादं गुह्यतमं परं योगं, योगार्थत्वात् ग्रंथोऽपि योगः, संवादमिमं योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं न परंपरया ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

राजन्निति । हे राजन्धृतराष्ट्र, संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं इमं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान् राजन्हृष्यामि च पुनः पुनः ॥७७॥

तच्चेति । तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन्, हृष्यामि च पुनः पुनः ॥७७॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्ष-संन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

यत्रेति । यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरः तत्प्रभवत्वात्सर्व-योगबीजस्य, कृष्णो, यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा, तत्र श्रीस्तस्मि-न्पांडवानां पक्षे विजयः तत्रैव भूतिः श्रियो विशेषो विस्तारो भूतिः ध्रुवा अव्य-भिचारिणी नीतिर्नयः; इत्येवं मतिर्ममेति ॥७८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टा-दशोऽध्यायः ॥१८॥

इति श्रीमद्भगवद्गीताशास्त्रं समाप्तम् ।

---

# श्रीमद्भगवद्गीताश्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।

## य.